दुष्टा दूषयतु क्षमा पुरमहोशिष्टाश्च वाक् चातुरीम्
काले भूषयतु क्षमा न च ममोत्साहो विषादेऽथवा ।
माद्यान् वारयमाभिसारयपराच्छ्री कंठशंभोशिवैः
माध्वी तां विनवेदियाम भवतोराशीपरां श्रीपतौ ।।

Colophonic : हरि ॐ तत्सदिति श्रीसम्मोहनतंत्रे श्रीपार्वतीहर संवादे श्रीगोपालसहस्रनामस्तोत्रं समाप्तं । श्रीराधाकृष्णसमर्पणमस्तु ।

इति श्रीभगवदर्पितसर्वस्वेन मिश्रदयालुशर्मणाकृतं श्रीगोपालसहस्रनामस्य (?) भूषणं समाप्तम् ।

Post-colophonic अथ लेखककृतः श्लोकः
श्रीगौडान्वयभूषणो द्विजवरः गोत्रे वसिष्ठे ह्यभूत् ।
श्रीकृष्णार्पितचित्तवृत्ति [म] धिकृन्मिश्रार्यवर्यः खलु ।।
गंगादास तदात्मजो द्विजरभून्नारायणाख्यो (ऽ) लिखत्-
श्रीगोपालसहस्रभूषणयुतं नाम सहस्राभिधम् ।।१।।
युग्मवेदाङ्कभूवर्षे माघमासि सिते शनौ ।
लिखितं च द्वितीयायां अहीछ्पुरवासिना ।।२।।
शुभं सं. १९४२ माघे मासि शु (क्ल) पक्षे
द्वितीयायां खोरामध्येश्रीनृसिंहमंदिरे समाप्तमिदम् ।।

## 1095 / 29239 बालात्रिपुरसुन्दरीसहस्रनामावली

Opening : श्रीगणेशायनमः ।। अथ श्रीबालात्रिपुरसुन्दर्याः
सहस्रनामावलिः प्रारभ्यते । आनन्दसिन्धवे नमः ।।१।।
आनन्ददायै नमः ।।२।। आनन्दमूर्त्यै नमः ।।३।।
विनोदिन्यै नमः ।।४।। त्रिपुरायै नमः ।।५।।

Closing : निर्द्वन्द्वायै नमः ।।९३।। अद्वैतगर्भिण्यै नमः ।।९४।। निष्प्रपञ्चायै नमः ।।९५।। महामायायै नमः ।।९६।। सप्रपञ्चायै नमः ।।९७।। सुवासिन्यै नमः ।।९८।। सर्वविश्वोत्पत्तिधात्र्यै नमः ।।९९।। परमानन्दसुन्दर्यै नमः ।।१००।।

Colophonic : इति श्रीबालात्रिपुरसुन्दरीसहस्रनामावलि संपूर्णा ।
बालात्रिपुरसुन्दर्याः सहस्राख्यावलिर्मुदा ।
प्रभाकरेण विशदीकृता तुष्यतु तेन सा ।।१।।

**Post-Colophonic :** श० १८१२ आश्विव शु. ११ शुक्र श्रीकाशीमध्ये दुर्गाघाट उपर घासीटोला में श्री प्रभाकरभट गोडशे.......

### 1136 / 28606 विष्णुसहस्रनाम भाषाटीकायुतम् ।

**Opening :** श्री गणेशाय नमः ।

वैशंपायन उवाच ।
श्रुत्वा धर्मानिशेषेण पावनानि च सर्वंशः ।
युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ॥१॥

**टीका:** वैशंपायन राजाजनमेजयसूं कहत भये । राजा युधिष्ठिरकौं भीष्माचार्य शान्तपर्व विषै समस्त धर्म कहे ते धर्मराजा युधिष्ठिर सुनि कैं मनमों विचारी कि सकलपुरुषार्थसाधन अल्पश्रम वहुतफल सुखकारक होसौ उपदेश न क......फिर युधिष्ठिर भीष्माचार्यं कौं पूछत भये ।

**Closing :** नमोस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणेनमः ॥६४१॥

अनंत जे भगवान् तिनकौं नमस्कार है ते कैसे हैं सहस्रसूर्ति हैं । पुनि कैसे हैं । सहस्रपाद कहैं । चरण अक्षि कहैं । नेत्र शिर कहैं । मस्तक उर कहैं । जघन अरु बाहु कहें भुजा जिनकी । पुनि केसे है पुरुष कहैं । अन्तर्यामी हैं । पुनि शाश्वत कहैं । निरन्तर हैं । पुनि कैसे हैं । युगन के सहस्र तिनकी जु अनेक कोटि तिनके धरनहार हैं तिनकौं नमस्कार ॥१४६॥ -

**Colophonic :** इति श्रीमहाभारते शान्तिपर्वणि वैयासिक्यां
संहितायां विष्णोसहस्रनाम श्रीमन्महाराजाधिराज-
श्रीमदनूपसिंहदेव निदेशतः पँवारजगरूप-
कारिता व्यासकृष्णदत्तकृता भाषाटीका समाप्ता ।

॥श्रीः ॥श्रीः॥

## 1206 : 29491 : गङ्गालहरी भावार्थतरियुता

**Opening :** ॐ नमः शिवायै गङ्गायै ।

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्-
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसाम्-
सुधासौन्दर्यं ते सलिलमशिवं नः शमयतु ।।१।।
श्रीगुरुगणेशांबिकेभ्यो नमः । श्रीमद्गंगायै नमः ।
श्रीमन्नारायणं नत्वा तद्भृत्येन द्विजन्मना ।।
गङ्गालहरिभावार्थंतरिरेषा वितन्यते ।।१।।

काश्यां निवसन् जगन्नाथत्रिशूली सर्वं लोकोत्तरसुखं यावज्जीवितमनुभूयप्राणप्रयाणसमये श्रीगङ्गायां देहं संत्यज्य मोक्षलाभार्थं तत्तटे गत्वा आदौ सकलाघौघहरं तज्जलं मन्वानस्तदेव स्तौति ।

**Closing** इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।।
यः पठेत्तस्य सर्वत्र जायन्ते जयसम्पदः ।।५३।।
इमामिति जगन्नाथेन निर्मितां कृतां इमां पीयूषस्य
अमृतस्य लहरी सा तथा तां यः कश्चित् पुरुषः पठेत्
तस्य सर्वस्त्र जयश्च सम्पदश्च ताः जायन्ते भवन्त्येव ।।५३।।

**Colophonic :** इति श्रीपण्डितराजजगन्नाथत्रिशूलीविरचिता
गङ्गालहरी समाप्तिमगात् । ॐ गङ्गा ।
इति श्रीमन्नारायणभृत्य विरचिता गङ्गालहरिभावार्थंतरिः समाप्ता । शुभं भूयात् ।

**Post-colophonic** टीकाकारको श्लोकः
वर्षे चंद्रवियन्निधिक्षितिमिते सन्मार्गशीर्षेऽमले-
पक्षे वाक्पतिवासरे हिमऋतौ गौरीतिथौ सन्मतिः ।।
राज्ये श्रीपवनात्मजाख्यनृपतेर्नारायणाख्यो द्विजः ।
श्रीगोपीपतिमंदिरे रचितवान् टीकामिमां सत्पुरे ।।२।।
मुनिव्योमाङ्कभूवर्षे चतुर्थ्यां प्रौष्ठपद्यकेऽ-
सिते पक्षेन्दुवारे च नारायण विलेखतु ।।३।।
संवत् १९०७ मासे भाद्रपदे चंद्रवासरे नारायण [सह।येन] लिखितं राधाकान्तमंदिरमध्ये ।।

**1207 : 29556. गङ्गालहरी-बालाबोधिनीटीकोपेता**

Opening :

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्-
महैश्वर्यं लीलाजनितजगतः खण्डपरशोः ।।
श्रुतीनां सर्वस्वं सुकृतमथमूर्ति सुमनसाम्-
सुधा सौन्दर्यं ते सलिलमशिवं नः शमयतु ।।१।।

। श्री गणेशाय नमः ।

भागीरथी त्रिदशसेवितपादपद्मा
अब्जाभयामृतकरा प्रवराद्यहस्ता ।।
मुक्ता-विभूषणविराजितचारुदेहा ।
पापं विनाशयतु मे सुकृतप्रवाहा ।।१।।
दुर्गाराममहं प्रणम्य पितरं गोविन्दरामात्मजं ।
साहित्यालय रङ्गनाथतनयं श्रीकृष्णभट्टं गुरुं ।।
टीकां बालमुदे करोमि विशदां गङ्गालहर्याः परां
तुष्यन्तु प्रतिभाजुषश्चपलता वीक्ष्यार्भकस्य स्फुटाम् ।।२।।

Closing :

विभूषितानंगरिपूत्तमांगा सद्यः कृतानेकजनार्तिभंगा ।।
मनोहरोत्तुङ्गचलत्तरङ्गा गङ्गा ममाङ्गान्यमलीकरोतु ।।५२।।
इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।।
यः पठेत्तस्य सर्वत्र जायन्ते जयसम्पदः ।।५३।।

पीयूषस्यामृतस्य लहरी पीयूषलहरी पठन् कर्तृणां मोक्ष-दायकत्वादक्षररूपायाः स्तुतेः पीयूषलहरीत्वेन उपमानम् । जगन्नाथेन जगन्नाथनाम्ना कर्त्रा निर्मितां कृतां यः पुमान् पठेत् तस्य पुंसः सर्वत्र सर्वकालं जयसम्पदः सर्वोत्कर्षसम्पदः उत्पद्यन्ते इति शिवम् ।

Colophonic :

इति श्री जगन्नाथनिर्मिता पीयूष-लहरी समाप्ता ।

संवद्वेदशरद्विदन्तकुमिते वर्षे शुभे माधवे
मासे कृष्ण दले शशांकदिवसे श्रीद्वादशीसत्तिथौ ।
दुर्गारामतनूजनिर्दलपतिर्गङ्गालहर्याः स्तुतेः
टीकां बालविबोधिनीं स निरमाद्भागीरथीप्रीतये ।।

### 1329/28266(2) सुन्दरबाहुस्तोत्र

।। श्रीमते रामानुजाय नमः ।।

श्रीमन्तौ हरिचरणौ समाश्रितोऽहम्
श्रीरामावरजमुनीन्द्र लब्धबोधः ।।
निर्भीकस्तत इह सुन्दरोरुबाहुं ।
स्तोष्ये तच्चरणाविलोकनाभिलाषी ।।१।।

**Closing :** इदं भूयोभूयः पुनरपि च भूयः पुनरपि-
स्फुटं विज्ञास्यामीत्यगतिद बुधोऽनन्यशरणः ।
कृतागादुष्टात्मा कलुषमतिरस्मीत्यनवधें-
र्दयायास्ते पात्रं वनगिरिपते सुन्दरभुजः ।।१३३।।

**Colophonic :** इति श्रीरामानुजाचार्यस्य कृपापात्रकुरेशविरचितसुन्दरबाहुस्तोत्रं सम्पूर्णम् । शुभं भूयात् ।।

### 1372/28295 चण्डिकार्चनचंद्रिका

**Opening :** ।। श्रीमहागणाविपतये नमः ।।

नमस्कृत्य गुरुं भक्त्या विघ्नराजं सरस्वतीम् ।।
नवार्णपद्धतिं वक्ष्ये सर्वतंत्रानुसारः ।।१।।
श्रीशङ्करानन्दगुरुपादपद्मप्रसादतः ।।
ईश्वराभिधयोगीश्रीचण्डीपूजाक्रमं ब्रुवे ।।२।।

**Closing :** एवं सा चण्डिका तुष्टा वक्तॄन् श्रोतॄन्श्चरक्षतीति ।
वेदाङ्गशैलावनिवर्षमध्ये ।
त्रयोदशीजीवदिने च पौषे ।।
शुक्ले दले विक्रमतो निबद्धः ।
पूर्तिगतः शङ्करसुप्रसादात् ।।

**Colophon & Post-colophonic:** इति श्रीश्वरयोगीचिद्रूपानन्दकृतायां
चण्डिकार्चनचंद्रिकायां षष्ठः परिच्छेदः ।।६।।

संवत् १८८० वर्षे मासोत्तममासे आसाढ़मासे कृष्णपक्षे तिथौ सप्तम्यां शनिवारे पुरुषोत्तमेन लिखितम् ।

## 1382/30038/ साधकसर्वस्व

Opening : ।। श्रीगणेशाय नमः ।।

स्फुरतां चरणावन्तः श्रीप्रकाशविमर्शयोः ।।
इदन्ताहन्तयोरैक्यं भवेद्यदनुकम्पया ।।१।।
आगमाम्बोधिसंभूतं सारात्सारतरं हि यत् ।
तद्वाक्यरत्नमत्रेह मया संगृह्यते स्फुटम् ।।२।।

Opening : पूर्णे कर्मणि श्रीमाता प्रसन्ना भवति ध्रुवम् ।।
प्रसन्नायां च सुलभावैहिकामुष्मिकौ यतः ।।२५८।।
सत्सुखं वर्ततां भूमौ यावद्धर्मः सनातनः ।
वंशत्रयमिते कामतिथौ तपसि तच्छिवम् ।।२५६।।

Colophonic & Post-colophonic इति श्रीशक्तिदर्शने साधकसर्वस्वे देवाभेदप्रकाशोनाम द्वाविंशत्तमः प्रकाशः ।।१२।।
शुभम् । सं. १९५६ पौष कृष्ण ४

## 1396/28394 कृष्णपूजापद्धतिः

Opening : ।। श्रीगणेशाय नमः ।।

मृगमदशोभितभालं रृतवनमालं निरस्तभवजालम्
कलये दशरथबालं सततमार्योलसल्लीलाम् ।।१।।
मुरलीवादनचतुरो गीतिरति वा कृष्णगोपिकाचित्तः ।
वृन्दावन् भुवि विचरन् रमतात्कृष्णो ममानिशं चित्ते ।।२।।

Closing : आत्मानं सततं कृष्णं संभाव्य विहरन्ति ये ।।
न तेषां डुष्कृतं किंचिद्दुष्कृतोत्था न चापद इति ।।
श्रीमत् कौशिकवंशप्रभवो रामांघ्रिपद्मरोलंबः ।।
नारायणोऽभवत्तद्भ्रातानुजनुर्बभूव गोविन्दः ।।१।।
तत्सूनुना मुरारे भैरवनाम्नार्हेणा विधिस्तु कृतः ।
तुष्यतु यदुपतिरमुना गोपवधू(टी)मुखाब्जपूर्णेन्दुः ।।२।।

Colophonic & Post-colophonic इति श्री जन्माष्टम्यादौ श्रीकृष्णपूजाविधिः समाप्तः ।।
विधुविधुरिपुभूयुते १६११ मिताब्देनभसिमृगांकथितौ महेशवारे ।

यदुकुलतिलकार्हणविधानं दरिणमितं हरिपंकजेर्ऽपितं च ।।
अनेन प्रियतां देवो भगवान् राधिकापतिः ।
श्रीदेवकी सुतः पूर्वेषामस्माकं कुलदैवतम् ।।

शके १७०५ शुभकृत् नामाब्दे श्रावणशुक्लअष्टम्यां रूपचंदात्मज गुलाबरायेण श्रीकृष्णपूजापद्धतिर्लिखिता शुभमस्तु श्रीरस्तु ।

## 1460/29468 कुमारसंभवटीका—अर्थदीपिका

Opening :

।। श्रीरामोजयति ।।

श्रीमन्मदनगोपालं नत्वा तत्वार्थदीपिकाम् ।
सर्वविघ्नापहर्तारं दातारं सर्वसम्पदाम् ।।१।।
विष्णुदासतनूजेन हरिदासेन धीमता
कुमारकाव्ये क्रियते यथाबुद्ध्यर्थदीपिका ।।२।।

तत्र भवान्कालिदासः कुमारसंभवं चिकीर्षुः वस्तुनिर्देशमङ्गलमाचरति । अस्तीति ।

Closing

प्रथमाश्च ते मुखविकारास्तैः कथंभूतां गौरीं नवपरिणयलज्जाभूषणं । नवश्चासौ परिणयः पाणिग्रहणं च तस्मिन् लज्जा सैव भूषणम् ।। आभरणं यस्याः सा ताम् । पुनः कथंभूतां गौरीं वदनं मुखमपहन्तीमपाकुर्वन्तीम् । कथंभूतं वदनं तत्कृतो क्षेपं तेन तेन महेश्वरेण कृतः उत्क्षेपो उत्थापनं यस्य तत् । पुनः कथंभूतां गौरीं शयनसखीभ्योऽपि कथंचित् महता कष्टेन दत्तवाचम् । शयने शय्यास्थाने सख्यः वयस्यस्ताभ्यः शयनसखीभ्यः दत्ता वाक् यया सा दत्तवाक् ताम् । मालिनीवृत्तम् ।४६।।

Colophon :

Post-Colophon

इति श्रीकुमारसंभवकाव्यार्थदीपिकायां हरपार्वतीविवाहो नाम सप्तमः सर्गः । लिखितमिदं पुस्तकं रामर्षि वैष्णवेन ।।

## 1468/28768 रघुवंशटीका विशेषार्थबोधिका

Opening :

।। श्रीगुरुभ्योनमः ।। नमोविघ्नच्छिदे ।।

ध्यात्वा तां ब्रह्मपुत्रीमधिकमधिगमं तन्वतीं दत्तपद्माम्
सेवा संप्राप्तदेवासुरविसरशिरोमौलिघृष्टांघ्रिपद्माम् ।

यस्या सन्मुग्धदुग्धोब्दलममलयशः श्रोतुमष्टश्रवांसी
वाजोदध्रोष्टकाष्ठावधिषुसरलसंगीतमाशाङ्गनाभिः ।।१।।
नूनं सप्तास्यचूडामणिषु विनमतः पादपद्मेस्वकीये
संक्रान्तो योऽष्टमूर्तीरधरमहिपतेरष्टकर्माय नुत्यै ।
यस्यानंताननंगो गदितुमिव सहस्रानननो भूषणांश्च
श्रीमत्पार्श्वं प्रदीव्य प्रशमरसमयं तं समस्तास्तदोषम् ।।२।।
शुद्धानेकरसप्रवाहविबुधा साधारणा प्रीतिदा
रेजे यस्य सरस्वतीव सकलान्सम्पादयन्ती मुखे ।।
सुक्तासारसरस्वती जनपदान् भव्यानभव्याश्रयम्
तं श्रीमद्जिनदत्तसूरिसुगुरुं चित्ते निधायाधुना ।।३।।
प्रणीय काम्यानि मनोमतानि स्फुरन्ति भक्तेषुपरश्शतानि ।
यस्याभिधानेन निराश्रवन्तं सदा श्रवन्तं कुशलं मुनीन्द्रम् ।।४।।
दिनकरवल्लभचारित्रवर्द्धनाग्रिमजनार्द्दनाभिख्यैः ।
कविभिर्विहिताः स्वहितास्तद्वृत्तीः प्रथममुपजीव्य ।।५।।
कुर्वे श्रीरघुवृत्तिं नव्यां भव्यार्थदीपनपटिष्टाम् ।
प्राप्य श्रीगुरुचरणादेशं शिष्यप्रबोधकृते ।।६।।

Closing : किं भूतं गर्भं अतः कुक्षौ गूढं गुप्तं क्षितिरिव यथा क्षितिः पृथ्वी श्रावणे सस्यसंपत्तये अन्तर्गूढं बीजमुष्टिं दधाना सती शोभते अतिशार्स्यतिभ्यश्चेत्यङ् शासिवासिघसीनां चेतिषत्वं अक्लीबेमुष्टरिति वैजयन्त्यामुक्तत्वान्नोपमादोषः । मंदा-क्रान्तावृत्तम् ।।५७।।

Colophon & Post-Colophon इति श्रीमत्खरतरगच्छीय श्रीगुणविनयगणिकृतायां विशेषार्थबोधिकाख्या श्रीरघुवृत्तावैकोनविंशतितमः-
सर्गःस्समाप्ति मगमत् ।।१८।।

संवत् १६५२ रा वर्षे मासोत्तममासेद्वितीयभाद्रवमासे कृष्ण-पक्षे त्रयोदशतिथौभृगुवारे ।..........
पोहकरणमध्ये लिखितं दशम्यां चतुर्मासोकृतायाम् ।

## 1475/28667 सीतारामसौराज्यकाव्य

**Opening:** श्रीमते रामानुजाय नमः ।

वन्दे श्रीवैष्णवाचार्यान् रामकैंकर्यसम्पदाम् ।
मुद्रिका यत्करे नित्यं हेतवो या हरेर्मुदाम् ।।१।।
लीला भूमिरभावगुण्ठितवपुर्वैकुण्ठवासीति यो
वेदान्ताधिगतात्मरूपविभवोभोगीन्द्रशायी च यः ।।
कौशल्यातनयेन तेन तरुणीनेत्रोत्सवेत्रावना
सर्वं वस्तु निजेतरं च विभुना भूयात् समर्थी सदा ।।२।।

**Closing** तत्रगा गुरुमतेन राघवो····· ·· रुचि········ (उ) दारधीः ।
भूमिहस्तितुरगां दराणि च प्राणमय्यमयसीश्वरेश्वरः ।।६५।।
योग्यमन्यदपि योगिनां·········मनाः प्रतीक्षते ।
अर्थिसार्थमधिकार्थदायको गायकीकृतः सुरद्रुमादिकः ।।६६।।
मङ्गलानुकथनादमण्डपं
मण्डितोनघगुणैरितो गतः ।।
इह चासने स्थितस्तोष्यते जनमन सुतोषकः
मङ्गलानुकथकैः (द्विजोत्तमैः ?)—·········।।६८।।
मङ्गलं मधुर मूर्तये दृशामुत्सबादमवतेस्तु राघव ।
·············मान······तया —·····गणाय च ।।६९।।

**Colophonic :** इति सीतासौराज्यम्

## 1476/28611 सूर्यसिंहवंशप्रशस्ति

**Opening :** ।। श्री गणेशाय नमः ।।

संचारा इव सैकतं सुविमलं बिंबा यथा दर्पणम्
वातावारिनिधि (:) शिलोच्चयशिलां धाराभिसारा इव ।
सद्वृक्षं तरुणा घुणा इव गुणा यं चित्रयन्त्युद्धृता
नित्यानन्दघनं मनः प्रशमनं तं कंचिदाशास्महे ।।१।।
लिंपन्तं कज्जलाद्रिप्रतिमनिजवपुर्नीलभासा दशाशा
नासाश्वासावधूतप्लवगकिलकिलाकूतकौतूहलाभम् ।
दृष्ट्वोच्चैः कुम्भकर्णं समिति सपुलको विस्मयस्मेरभाजः
कल्याणं कल्पयन्तां रघुतिलकमणेर्लब्धलक्षाः कटाक्षाः ।।२।।

Closing :

आसीद्वेदविदां वरो (ऽ) तिविशदे यो वत्सगोत्रे द्विजः ।
श्रीमानुदानिगणाग्रणीर्नरहरिः श्रीमालिनामन्वये ।।
येनानेक रत्नमौक्तिकतुलारूढेण रौक्मीं तुलां
काश्चित्स्वात्मनिवारतो नु भवने दास्योऽपि संरोपिता ।।४०।।

तत्पुत्रोऽपि तथैव लक्ष्मण इति ख्यातस्त्रिपाठी ततो
वैकुण्ठः किल येन विप्रवनिताम्लेच्छौघवन्दीकृताः ।
दत्वा द्रव्यचया न मोक्षत ततः सूनुः सतामग्रणीः
संजज्ञे हरनाथ इत्यथ ततो विद्वानभूद्विठ्ठलः ।।४१।।

युक्तिव्यक्तिस्तदनुजनुषा माधवेन व्यधायि
स्फूर्जत्येषा भवतु भुवने सूरसिंहप्रशस्तिः ।
दोषे दूरीकुरुत कवयः सद्गुणं धत्त यस्मात्
सन्तः सत्यं किल परगुणग्राहिणस्ते प्रशस्ताः ।।४२।।

एषा कीर्तिपवित्रितत्रिजगतां राजर्षभानाम् यशो-
वर्णालीकविदक्ष्यणे न विविधालंकारशून्याऽपि चेत् ।
आदेयोत्तमपुरुषैः कलियुगे नौ नाशिनि विश्रुता
वंद्या पामरकीर्तितापि यदिव श्रीरामनामावलिः ।४३।।

फुल्लतामरसदामभूषितम्,
श्यामलं किमपि धामकामये ।
वामवल्लवकृशोदरीदृशो–
र्यंद्वशीकरणकज्जलीयति ।।४४।।

Colophonic & Post-Colophonic

इति श्रीसूरसिंहवंशप्रशस्तिः । चतुर्थः सर्गः । श्रीमाधव-भट्टकृतम् । संवत् १७७७ शाके १६४२ रा आश्विन कृष्ण षष्ठीरवि········ ···।

## 1484/28473 प्रत्यङ्गिराविधि

।। श्री गणेशाय नमः ।।

Opening :

अथ प्रत्यङ्गिरां वक्ष्ये सारभूतामथर्वणे ।।
यद्भक्तस्य दृशः पातात् भूतप्रेतादिदेवताः ।।१।।

कर्तारमधिगच्छन्ति साध्यानिष्टं न जायते ।।
शान्तिं पुष्टिं च ऋद्धि (द्धिश्च) साधकाय प्रयच्छति ।।२।।

Closing

कुबेरं ते मुखं रौद्रं नन्दिनानन्दमावह ।
ज्वरं मृत्युं भयंघोरं विघ्नं नाशाय मे ज्वर ।।
पादैरर्द्धद्वयेनापि कृष्णांवरादिनामभिः ।
युक्तैश्च पूर्ववत्कुर्यादङ्गुष्ठादि षडङ्गकम् ।।
ध्यानं पूर्ववदेव स्यादात्मरक्षादिकं तथा ।
गायत्र्यादिभिर्मन्त्रैस्तु प्राग्वत् संदर्भितं मनुम् ।।
जपेदष्टशतं चाष्टसहस्रं कार्यं गौरवात् ।
अवश्यं जायते कार्यं विधिः प्रत्यङ्गिरस्त्वयम् ।।
मेरुतंत्रे ।...............

## 1490/28645 जानकीगीतसटीक

।। श्रीमते रामानुजाय नमः ।।

Opening :

साम्राज्यमर्पयति भक्तिलवेऽप्युदग्रम्
प्रेम्णि प्रदर्शयति पादसरोजशोभाम् ।
विघ्नानि वारयति या भजतां समन्तात्
सा जानकी विजयते कुलदैवतं नः ।।१।।
विद्युच्चमत्कृतिमवाप निरीक्ष्य कान्ति
क्षोभंकरीन्द्रनिकरो गतिमाकलय्य ।
यस्या विलोक्य वदनं परितापमिन्दुः
सा जानकी रघुपतेर्मुदमातनोति ।।२।।

अथ सोऽयं कविनिचयचूडामणिः श्रीमान्हरिराचार्यः श्रीजानकी-रमणरहस्यमकरन्दनिभृतहृदयारविन्दः सहृदयभक्तजनाभ्यर्थन-परवशः स्ववाङ्माधुरीपरिषेवितैः कवित्वैः सुगोप्यमपि तद्रहस्यं प्रव [श] स्तदुत्कर्षरूपं मंगलमाचरति ।

Closing & Colophonic

विद्याविभूषणयुतो हरिरब्जनाभ
पादारविन्दमधुपो यदिदं व्यधत्त ।
श्रीजानकीचरितगीतमुदग्रभावा-
स्तत्साधवः प्रतिदिनं मुदिताः पिबन्तु ।।
इति श्रीहर्याचार्यविरचिते श्रीजानकीगीते
सानन्दसीतारघुनन्दनो नाम षष्ठः सर्गः ।।६।।
अस्मिन् हरिकविकाव्ये विलसंति रसादयो बहुव्यङ्ग्याः ।
विस्तरभयान्नैते निखिला प्रोक्ता न तद्भाष्ये ।।१।।

श्रीजानकि त्वयि कृपा प्रविसर्पिवीचि-
रुद्भाति सर्वविषयेति वदन्ति सन्तः ।
तेनाहमुद्धतमनाः प्रभवामि देवि
त्वद्गीति-नीरजसुगन्ध-विसारदक्षः ।।२।।

इति श्री वलदेवसूरिविरचिते श्रीजानकीगीतभाष्ये षष्ठः सर्गः ।

## 1496/28772 नागराजशत

Opening : ।। श्रीभवान्यै नमः ।।

शुभ्रं क्वचिद्क्वचिदतीव सितेतराभम्
क्वापि प्रफुल्लनवपल्लवसंनिकाशम् ।।
तप्तं क्वचिद्क्वचनशीतलमस्तुवस्तु
कैवल्यसंश्रितपदानुगतं मुदे वः ।।१।।

नागराजशतं ग्रंथं नागराजेन तन्वता ।।
अकारि गतवक्त्रश्रीनगराजो गिरां गुरुः ।।२।।

वसंतकाले चकितां नतांगीं
विज्ञाय वक्रीकृतचापदण्डम् ।।
मनोभवंसौरभशौभमानै-
रपूरयत्पाणियुगं प्रसूनैः ।।३।

Closing : तस्माज्जातः सुजातो निजगुणमणिभिः प्रीणिताशेषलोकः
काकाहंकारकारीस्मितमहितमुखष्टाकवंशावतंसः ।
भाति श्रीनागराजो परनृपतिशिरोदर्शितोद्यत्प्रतापो
राजन्ते यं समेते विगलितकलहे वाकपद्मालया च ।।१०२।।
भारत्या यदि पुंस्त्वमामरतरत् प्रातिवेक्रोऽस्ति चेत्-
संगत्या यदि मन्यसे सकलतामन्ये शशाङ्के यदि ।।
सिंहे चेन्नरता जितारियशसा भावाग्नि चूडामणि-
स्तत्तत्सद्गुणतोपमान घटना स्यान्नागराजप्रभोः ।।

Colophonic : इति श्रीनागराजशतं सम्पूर्णम् । शुभं भवतु । संवत् १७०४ वर्षे वैशाख वदि ५ ।।

## 1514/28359 षड्ऋतुमाधवलीलावर्णन

**Opening :** ।। स्वस्ति श्रीकृष्णाय नमः ।।

कृष्णं नत्वा रमानाथं राधेशं गोपिकाप्रियम् ।
सर्वानन्दकरं देवं भक्तानां भक्तिदायकम् ।।१।।

भ [व्या] षड्ऋतुमाधवलीलावर्णनटीकिका ।
तदर्थदीपिका शुभ्रा क्रियते मे यथामति ।।२।।

सर्गे प्रथमकेप्यस्य दशावतारवर्णनम् ।
प्रोच्यते कृष्णलीला च कृष्णगोपालवर्णनम् ।।३।।

ननु मदाज्ञया चेत्………कृतं षड्ऋतुवर्णनं तर्हि श्रोतास्य भवामि । ननु पुनरन्यत् किमपि प्रार्थय मत्प्रीत्यर्थम् तत्राह––

एतत् कृष्णं पुनर्याचे यावत्तिष्ठति मेदिनी ।
तावत्तिष्ठतु गानाय सद्भक्त मुखपंकजे ।।४।।

**Colophon** इति श्रीजयसिंहमिश्रकृते षड्ऋतुमाधवलीलावर्णनसमुच्चये श्रीकृष्णप्रेमश्रवणभक्तिप्राप्तिप्रार्थनानामाष्टमः सर्गः समाप्तः ।। शुभं भवतु ।

## 1521/29606 षड्भाष्ययुतपत्र

**Opening** स्वस्ति ।

श्रीसिद्धसिद्धान्ततत्त्वबोधविधायिने ।
अस्तुविद्याविनोदेनात्मानं रमयते सते ।।१।।

कृताधिवसतिः साधुः श्रीमद्बेनातटाश्रये ।
षड्भाषो लेखलीलायां रूपचन्द्रः प्रवर्तते ।।२।।

अथात्र पत्रोपक्रमे कविः सरस्वतीं सभाषते-
स्वर्गाधिवासिनि सरस्वति मातरेहि
ब्रूहि त्वमेव ननु देवसदोविनोदम् ।।
नाट्येन केन भगवान् मघवानिदानीम्
सन्तुष्यति स्वस्र॒ (?) धिभावितविश्वभावः ।।३।।

**Closing** राजन् चिरंजीव विधेहि राज्यम्
चिरं महाराज [ ]रमार जीवं ।।

आनन्दरामान्वहमेव नन्द
श्रीधर्मलाभं सततं लभस्व ।।३२।।

Colophon : इति श्रीनाटिकानुकारिषड्भाषामयं पत्रं लिखितं मार्गशीर्षसितं तृतीयातिथौ ।।१७८७ वर्षे ।

आनन्दरामस्य कुतूहलार्थं, भाषाश्चषट्तंत्रविबोधनार्थम् ।
सर्वज्ञपुत्रत्वकवित्वसंज्ञोन्मादप्रमोदाददहमप्यलेखम् ।।१।।

## 1541/28154 (3) नीतिप्रदीप

Opening : रत्नाकरः किं कुरुते स्वरत्नैः
विंध्याचलः किं करिभिः करोति ।
श्रीखण्डखण्डैर्मलयाचलः किं
परोपकाराय सतां विभूतिः ।।१।।
दानार्थिनो मधुकराः यदि कर्णतालै—
र्दूरीकृता करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनः विकचपद्मवने चरन्ति ।।२।।

Closing : समायाति यदालक्ष्मीः नारीकेलफलांबुवत् ।।
विनिर्याति यदालक्ष्मीर्गजभुक्तकपित्थवत् ।।१६।।

Colophonic : इति श्रीमहाकविवेतालभट्टविरचितं नीति—
प्रदीपकाव्यम् समाप्तम् ।।

## 1579/28699 सारस्वतव्याकरणमङ्गलावृत्तिः

।। नमः श्रीगीर्गुरुभ्यां नमः ।।

Opening : वागीश्वरीं प्रणम्यादौ श्रीजिनेन्द्रमुखोद्भवाम् ।
कृदन्ताख्यविवृत्तेश्च वार्तिकां कथयाम्यहम् ।।१।।
अथानन्तरं कृदन्तसाधनिका कथ्यते ।

Closing : लोकादन्यव्याकरणात् । शेषस्यास्मिन् व्याकरणेऽनुक्तस्य शब्दस्योत्पत्तिः । यथा मातर पितरादेः । तद्वत् सर्वेषामपि । साधनिका साध्या । रकादिस्सुगमोयं श्लोकः ।

नीलेन्दीवरलोचना घनमुदा पूर्णेन्दुरम्यानना
वीणावेणुसमस्वरा विजयते शृङ्गारकल्पद्रुमा ।
दानोन्मत्तकरीन्द्रलीलगमना सा पीनकुम्भस्तनी
प्रेमस्थेन पराशया भगवती श्रीवर्द्धमाना भुवे ।।१।।

पाठकानां प्रसादेन मेघजीख्यातिधारिणा ।।
सागरेण कृता वृत्तिर्वर्द्धमानादिमङ्गला ।।२।।

सारस्वताभिधानस्य सर्वलोकशिरोमणेः ।।
कृदन्ताख्यप्रबन्धस्य रामकृष्णार्थमाहिता ।।३।।

स्वरूपान्तेऽनुभूत्यादिः शब्दोऽभूयत्र सार्थकः ।।
समस्करीशुभां चक्रे प्रक्रियां चतुरोचिताम् ।।४।।

युग्मकम् ।

समस्करींमिति चतुरनरपरां भव्यां प्रक्रियां चक्रे सः कः यत्र स्वरूपान्तेऽनुभूत्यादिशब्दोऽर्थसंयुतोऽभूत् ।

अवताद्वो हयग्रीवः कमलाकर ईश्वरः ।
सुरासुरनराकारमधुपापीतपत्कजः ।।५।।

अवताद्वो जिनाधीशः वृषभो वृषनायकः ।
यस्य स्मरणादेव विलयं यान्ति कलमषाः ।।६।।

**Colophonic & Post-colophonic**

इति श्रीमदुपाध्याय १०८ माणिक्यहर्षगणि शैक्षोपाध्याय श्री ज्योतिस्सागरगणिकृता सारस्वतवर्द्धमान मङ्गला नाम्नीवृत्तिस्संपूर्णां त्रिवाडीश्रीवेणीदासाङ्गजेन नवलेन लिपीकृतमेतत् । संवत् १७८३ वर्षे मितीमधोः सितेतरद्वादश्यां श्रीमेदपाटदेशे पहुनाख्यपत्तने रम्ये तटे निवसिते तटस्थे राणाश्रीसंग्रामसिंह विजयिनि ।।

## 1599/28542 धातुरत्नाकर

।। श्रीशारदायै नमः ।। ऐं नमः ।

**Opening :**

सकलपण्डितचक्रवालचक्रवर्तिपण्डित श्री १०८ श्रीजयविजयगणिगुरुभ्यो नमः ।

श्रीमान् सश्रीसुमतिविजयोबुद्धिसौभाग्यदाता
कल्याणालीं वितरतु सतां विश्वविश्वोपकारी ॥
यस्मिन् गर्भेस्थितवति प्रसूः प्रज्ञया स्त्रीद्वयस्य
जातावादापघटनपटुर्हर्षयन्ती जनौधम् ।।१।।

अगणितमहिमाच्यो देवनागेन्द्र पुंभिः
प्रकटमभयदेवाचार्यवर्यैः सुनुत्या ।
प्रकटितवरबिबः पापतापापहारी
विदलतु दुरितौघं स्तम्भनाधीशपार्श्वः ।।२।।

या ध्याता योगीन्द्रैर्नमस्कृतानेकबुधजनैस्ससततम् ।।
हृन्मुखकमलनिवासं करोतु मम भारती सार्च्या ।।३।।

Closing : इतौ गतौ। शवति शोता। शोष्यति। अचि शवः। उणादौ बाहुलकान्न पूर्वांत् के अशोकः। बाहुलकात् किति केशुकः। पक्षी-ऋषिश्च। बाहुलकात् दीर्घे च शूकः। धान्यादेः शूंगं पुंक्लीवः। सुषिचत्तिञ्नि दीर्घे च। शवति संग्रामं शूयते वासौ रिपुभिः शूरः विक्रान्तः केचित् कुमुदाकर इवप्रौढ सूरभास इति सुबंधुश्लेषात् ।।

## 1601/29508 वाक्यदीपिका

Opening : अथ किमिदं वाक्यं नाम एकतिङ् वाक्यमिति भाष्यात् एकतिङ-तार्थमुख्यविशेष्यकबोधजनकपदसमुदायो वाक्यमिति वैय्याकरणाः तेन पर्चति भवति पश्य मृगो धावतीत्यादौ च क्रियापदयानेकत्वेनैक वाक्यता व्याघातः।

श्री गणेशाय नमः। सुप्तिङन्तचयो वाक्यमिति प्रमाणानुसारेण सुबन्तचयत्वे सति तिङन्तचयस्वस्य मिलितस्य प्रत्येकं वा सुबन्तचय-त्वादेर्वाक्यलक्षणत्वे परस्परमव्याप्तिः पदसमूहत्वमित्यस्य गौरश्वः पुरुषो हस्तीत्यादावतिव्याप्तिरित्याशयेन पृच्छति।

Closing : अन्यथा हंसीव कृष्ण ते कीर्तिस्वर्गङ्गामवगाहत इत्याद्युपमाने संख्यान्वयानङ्गीकारे स्वर्गङ्गावगाहनाश्रयत्वस्याख्यातार्थस्य संख्या-याश्च साधारणधर्मत्वानुपपत्तेः। हंसीव कृष्ण ते कीर्तिरित्यादी-नामप्यसाधुत्वापत्तौ चालङ्कारिकमते वैरस्यापापकलिङ्गवचनभेदस्यो-पमानोपमेयनिष्ठस्य दुष्टत्वं न स्यात्।। संख्याकालातिरिक्ताख्या-तार्थो हि भावना भावनान्वयिनि संख्यान्वय इति नियमाच्च क्वचिद्वि-शेष्यस्यक्वचिद्विशेषणस्य परामर्शात्तात्पर्यः।। तात्पर्यविषयपरामर्शित्वं तच्छब्दस्येति मतं परन्तु पदार्थतावच्छेदकरूपविशेषणस्य क्वचिदपि न परामर्शः इति वाक्यवादस्समाप्तिमगात्।

परन्त्विति। पदार्थतावच्छेदकरूपविशेषस्य पदशक्यतावच्छेदकरूप विशेषणस्य नातः पटोलपत्रमित्यादौ पटोलादिपदस्य पटोलादि-संबंधिनि लक्षणास्वीकारे पटोलादेः पदार्थतावच्छेदकत्वेऽपि तत्परा-मर्शानुपपत्तिरिति भावः।

स्ववरक्षणत्वव्यापिकाविद्यातत्प्रयुक्तहस्याश्रयकालपूर्वताभावक-शुद्धचिद्ज्ञाननिरस्तविपरीत भावनीभूत श्रीमदुदर्यसिहप्रभुवर्यलब्ध-जीविकमिश्रहरनाथयशोनिर्मिता वाक्यदीपिका समाप्ता।

**Post-colophonic** अश्विनस्थ सिते पक्षे द्वादश्यां बुधवासरे पुस्तकं वाक्यटीकायाः विमलंलिखितं मया रामलालेन मिश्रेण स्वात्मजपठनाय चासंवत् १९१४ का शुभं भूयात्कल्याणमस्तु आरोग्यमस्तु ऐश्वर्यमस्तु श्रीरामचंद्राय नमोस्तु ।

## 1603/28798 (1) शब्दनिष्पादन (शब्दव्युत्पत्ति)

**Opening :** ।। श्रीमदिष्टदेवाय नमः ।।

गोपीशं गोपिकागीतं सादरं वनमालिनम् ।
लसत्पीतांबरं ध्यात्वा सहितं गोपबालकैः ।।१।।

निष्पादनं च शब्दानां यथार्थं लिख्यते मया ।।
गुरुं प्रणम्य शिष्याणां विनोदाय ममैव च ।।२।।

**Closing :** विंशत्यादय इत्यनेन सूत्रेण सहस्त्रादयः संख्याशब्दाः साध्यन्ते ।

**Colophonic :** इति श्रीहेमशब्दानुशासनादिसुशास्त्रतः एकादिशत पर्यन्तं शब्दसाधनिका शुभाख्या लेखीयं मनोरम्या ऋजुः सहजकीर्तिना यदशुद्धं भवेदस्या तच्च शोध्यं विचक्षणैः ।।

।। इति श्रीशब्दव्युत्पत्तिःसंपूर्णा ।।

## 1627/29856 धनञ्जयनिघण्टु

**Opening** ।। श्रीगणेशाय नमः ।।

तन्नमामि परं ज्योतिरवाङ्मनसगोचरम् ।
उन्मूलयत्यविद्यां यद्विद्यामुन्मीलयत्यपि ।।१।।

युग्मनाम

द्वयं द्वितयमुभयं यमलं युगलं युगं युग्मम् ।
द्वन्द्वं यमं द्वैतं पादयोः पा नैनयोः ।।२।।

**Closing :** अर्हंत्सिद्धानिति द्वाव—
प्यर्हत्सद्धाभिधायिनौ ।
अर्हंदादीनविप्राहुः
शरणोत्तममङ्गलान् ।।४६।।

**Colophonic :** इति श्री धनञ्जयस्यकृतौ निघण्टुसमये शब्दसंकीर्णस्वरूपनिरूपणे द्वितीयः परिच्छेदः समाप्तः ।

Opening :

## 1644/29516 कुवलयानन्दवृत्ति

॥ श्रीगणेशाय नमः ॥

उपमा यत्र सादृश्यं लक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृ (ष्ण ) ते कीर्तिः स्वर्गङ्गामवगाहते ॥१॥

यत्रोपमानोपमेययोश्चारुसादृश्यं तत्रोपमालङ्कारः । हंसीवेत्युदाहरणम् । इयं पूर्णोपमेत्युच्यते । हंसी कीर्तिः स्वर्गङ्गावगाहनमिव शब्दश्चेति एतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ।

Closing & Colophonic :

अष्टौ प्रमाणालङ्काराः प्रत्यक्षप्रमुखाः क्रमात् ।
एवं पञ्चदशाप्यान्यानलङ्कारान्विदुर्बुधाः ॥६६॥

एतेषामुदाहरणानि कुवलयानन्दे द्रष्टव्यानि ।

इत्याकूतमहादेवकृतिनाऽल्पाक्षरोद्धृता ।
वृत्तिः कुवलयानन्दाच्चन्द्रालोकस्य सुन्दरा ॥६७॥

इति । समाप्तोऽयं ग्रंथः । शुभमस्तु सर्वस्य जगतः ।

कैशिक्यारभटी चैव सात्विकी भारती तथा ।
चतस्रो वृत्तयो ज्ञेया यासु नाद्यं प्रतिष्ठितम् ॥
अविः संगतिपूर्वार्द्धस्तवर्गंतरपञ्चमः ।
स्तुति सिद्धजितेः श्लोकः शकुनेषु प्रशस्यते ॥१॥

Post-Colophon संवत् १७७२ समये (९) नाम्यश्रावणमासे कृष्णपक्षे द्वादश्यां १२ गुरुवासरे । लिखितमिदं पुस्तकं गुरभारीलालकायस्थः काश्यां मध्ये वासा सर्वेयश्वर घाट उपर । श्रीभवानीशङ्कराय नमः ।

## 1645/28644 रघुपतिरहस्यप्रदीपिका

Opening :

॥ श्रीरामचन्द्राय नमः ॥

रामं दूर्वादलश्यामं पद्माक्षं पीतवाससम् ।
नमामि शिरसा देवं जानकीनिजनायकम् ॥१॥

वन्दामहे महेशानं हरकोदण्डखण्डनम् ।
जानकी-हृदयानन्दचंदनं रघुनन्दनम् ॥२॥

मुख्यरसेषु पुरा यः संक्षेपेणोदितो रहस्यौधात्।
पृथगेव भक्तिरसराट् सविस्तरेणोच्यतेऽत्र मधुरः ॥३॥

Closing & Colophonic :

मधुपानं वधूवेषधृतिः कपटसुप्तता
द्यूतक्रीडापटाकृष्टि [ ] श्लेषे नखार्पणम् ।
बिंबाधरसुधापानं संप्रयोगादयोमतः
जल्पपरस्परसंगो [ ] वितथोक्तिश्च कथ्यते ॥

इति श्रीरघुपतिरहस्यप्रदीपिकायां संभोगभेदप्रकरणम् । मुनि श्रीनारायणदासनिर्मिताटीका ।

## 1647/28529 रससिन्धु

Opening :

या चुंबति लोचने सा निद्राऽधुना न त्वहतेऽङ्गना वा ।
अत्र श्लेषप्रयत्नेन निद्राच्छेदविषयिणी अवस्थे प्रोक्ते । तनुता यथा ।
स्मरेण निस्तक्ष्य वृथैव बाणै—
र्लावण्यशेषांक शतामनापि ।
अनङ्गतामप्ययमाप्यमानः
स्पर्द्धां न साद्ध विजहाति तेन ॥

Closing :

अत्र किं शब्देन जिज्ञासितवाचकेन चिन्ताख्यो व्यभिचारी भावो व्यज्यते । तस्याश्चागतिकत्वेन व्यर्थत्वाद्भावाभासत्वम् । रसाभास-भावाभासावुक्तौ ।

Colophon :

इति श्रीमत्पौण्डरीकरामेश्वरकृते रससिन्धौ भावादिनिरूपणं नाम चतुर्दशतमं रत्नम् ॥ समाप्तोऽयं रससिन्धुनामा ग्रंथः ॥

## 1657/29962 विदग्धमुखमण्डन-सुबोधिकाटीकायुत

॥ श्रीसरस्वत्यै नमः ॥

॥ श्रीजिनकुशलसूरिगुरुभ्यो नमः ॥

Opening :

शिवसुखाय विलोक्य त्रिविष्टपत्रितयभावविमुद्रविलोचनः ।
जिनमतिर्वंगलावलनायको भवतु भव्यजनस्य मतिप्रदः ॥१॥

ध्यात्वा पङ्कजनयनां शारददेवीं पवित्रवसनधराम् ।
वीणापुस्तकहस्तां सितच्छदस्थान्मामि हृदि ॥२॥

श्रीधर्मदासकविकृतविदग्धमुखमण्डनाभिधस्य ।
कुर्वे काव्यालङ्कृति नाम्नो ग्रन्थस्यवृत्तिमिमाम् ॥३॥

Closing & Colophonic

अश्वयुजो मासस्य पूर्णमास्यां रात्रिरिति ज्ञायते। ईदृशी रात्रिः कस्य मनो मदनातुरं न करोति एवं च्युतत्वाक्षरं दर्शितमित्येवं षड्विंशत्युदाहरणानि व्याख्यातानि। एतत्समाप्तौ च समाप्तोऽयं श्रीविदग्धमुखमण्डनस्य चतुर्थः परिच्छेदः। एवं चत्वारोऽपि परिच्छेदा अर्थेनसह निरूपिताः। एतावन्मात्रमेव विदग्धमुखमण्डनमस्ति।

श्रीलब्धिवर्द्धनमुनिविनयीविनेयो
विद्यावतां क्रमसरोजपरीष्टिपूतः॥
चक्रे यथामति [शु] भां शिवचन्द्रनामा
वृत्तिं विदग्धमुखमण्डनकाव्यसक्ताम् ॥१॥

वंदन्तुभूपालविसालवर्षे
हर्षेण वर्षान्पियहर्षदतौ॥
मेवातदेशेऽलवराभिधाने
पुरा समारब्धमिदम्मयासीत् ॥२॥

विख्यातः शासनेऽस्मिन् प्रवरखरतराऽभिख्यगच्छोगरीयान्
यस्मिन् योगीन्द्रमुख्या जिनकुशलवरास्सूरयस्सम्बभूवुः।
चारित्राचारचञ्चुर्विहितयतिनतिः सूरिराट् जैनसिंहः
सिंहोवादिद्विपानां श्रुतजलजलधिः शास्ति भट्टारकत्वम् ॥२॥

श्रीलब्धिवर्धनमुनिर्महिमैकमेरुः
श्रीजिनसिंहसुगुरोरजनिष्ट शिष्यः॥
येषां कुशाग्रधिषणा सुपदप्रतिष्ठाम्
शिष्याः समीयुरवनीशसमाजभाजः ॥३॥

उकेशवंशेपरिलब्धजन्मा
उवाह दीक्षां विधिवद्गणेऽस्मिन्।
भ्रातुर्चन्द्रगर्गेनिदेशात्
वृत्तिं प्रकुर्वे शिवचन्द्रनामा ॥४॥

Post-colophonic

इति श्रीधर्मदासकविविरचिते विदग्नमुखमण्डने काव्यलंकारे वृहत्खरतगच्छी (य?) पण्डित श्री लब्धिवर्धनमुनिसुशिष्यशिवचन्द्र-मुनिकृता सुबोधिकानाम चतुर्थपरिच्छेदस्य वृत्तिः। ग्रन्था ......ग्रन्थं २०००। संवत् १६६९ वर्षे श्रीआगरानगरे राजधान्यां पातिसाहि जलालदी सुतरत्नपातिसाहि श्रीजहांगीरविजयराज्ये इयं विदग्धमुख-मण्डनवृत्तिः कृता। लिखिता च। वाच्यमाना चिरं तिष्ठतु। यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया। यदि शुद्धमशुद्धं वा मय दोषो न दीयते॥ इति वचनात्। श्रीरस्तु शुभं भवतु।

## 1659/28179 आलापमञ्जरी

**Opening :**

अथ भैरवरागः

तत्र प्रथमं भैरवरागालापः। स त्रिधा। औडवषाडवसम्पूर्ण-भेदात्। आद्यविकर्ष समाधाधारिसाधासा दोल नारिण। औडवा षाडवा पूर्णा भैरवी भाति मूर्च्छना।

अथोदाहरणं वच्मि यथोक्तं पूर्वसूरिभिः। परिजातोक्त-आलापो भावसूरिणा तत्र प्रथमम्। त्रिधामूर्च्छना धनिलिखितः सारिगम। पमगरिषानिध। इयं पूर्णा। धनिसागमप, मगसानिध। इयं षाडवा। धनिसा, गमग सनिध। इयं औडवा।

**Closing :**

काकस्यानन्तरं राजितः। उदाहरणम्। सरिगम पाधमप गरिसा निधपध पधधप, सामपमगरिसा, निसानिधपधमप मपमपप गरिसा, पनीपनीसा, गरिममगरिसा, निसारिसानि, सानिधप, गमपपमम, मपमगरिसानि, सारिनिसानि ध, पपसागमपम, मपम, गरिसा, पगरिसा, नीसारिनीसानीधप, पसासा, म, गरेसा। इति ढक्काः।

**Colophon & Post-colophonic:**

इति श्रीसंगीतरा(य) जनार्दन (भ) ट्टाङ्गजानुष्टुप्चक्रवर्तिसंगीत-रायभट्ट विरचिते संगीतानूपाङ्कुशे रागाध्यायः समाप्तः। शुभं लेखकपाठकयोः। अग्निवस्वंकेन्दु वैक्रमवत्सरे...... न्याब्दे फा.कृ. दशम्यां रवौ ति. पणगो लिखितवान्।

## 1664/29961 सरस्वतीनारदसंवाद

**Opening :**

॥ नमः श्रीसरस्वत्यै ॥

आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठोनिसारकः।
अडुतालस्ततो रासः एकतालीति सम्मतः ॥१॥

उत्तमः षट्पदः प्रोक्तो मध्यमोपञ्चभिः स्मृतः।
कनिष्ठश्च चतुर्भिस्स्यात् कथितोपूर्वसूरिभिः।

**Closing :** एवं एकत्रिंशतशताधिकास्तालभेदाः प्रतिपादिताः।

**Colophonic :** इति ताल-प्रकरणं समाप्तम्।

## 1688/29897 माधवनिदानसभाषाटीका

**Opening :**

॥ श्रीगणेशाय नमः ॥

नत्वा सुरासुरैर्वन्द्यं भगवन्तं शशिशेखरम्।
माधवोक्त निदानस्य टीकाभाषा करोम्यहम् ॥१॥

दक्षापमानसंक्रुद्धः रुद्रनिश्वास संभवः ।।
ज्वरोऽष्टधा पृथक् द्वन्द्व संघातागन्तुकः स्मृतः ।।२।।

प्रजापति ब्रह्मका पोता तिस सभा महि महादेव की अपमानु निरादर कीया । तब महादेव कुप्या । कोप करि ......

Closing : काम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।।
विधिवत्सव्यमाने तु पद्ये सन्निहिता गुणाः ।।

सुन्दरता रुचि मन तुष्टि तेज पराक्रम ए गुण तत्काल निकट है विधिवत् सेवेहू ए मदा को ।

## 1697/29226 अनुपानमंजरी

Opening : ।। श्रीगणेशाय नमः ।।

यस्य ज्ञानमयी मूर्तिः सच्चिदानन्दकारिणी ।।
तत्पादपंकजं वन्दे ग्रंथसम्पूर्ण हेतवे ।।१।।
धातुस्तथोपधातुश्च विषं स्थावरजंगमम् ।।
तस्यविकारशान्त्यर्थं वक्ष्येऽनुपानमञ्जरीम् ।।

Closing & Colophonic : दद्रुकं द्रूपां कुष्टे चर्षं गन्धकपारदम ।।
लेपनाद्भवति शान्तिः यथा नेत्ररसाञ्जनम् ।।३७।।

एवानुपानयोगेन भेषजं कारयेद्भिषक् ।।
यथा रोगं तथा पथ्यं देशकालवयः पुनः ।।३८।।

सवदष्टादशेवर्षे सागरानेत्रचाऽधिके ।।
चैत्रे सिते च पञ्चम्यां गुरुवारे च ग्रंथकृत् ।।३९।।

कूर्मदेशेऽर्जुनपुरे तत्रवासी सदा किल ।।
गुरुजीवाभिधानस्य गबचागमसंतिकः ।।४०।।

तस्य पीतांबरो शिष्यः तत्पादवन्दकः सदा ।।
देवगुरुप्रसादेन विश्राम ग्रंथकारकः ।।४१।।

इति श्रीअनुपानमञ्जर्यां धातूपधातुमारणं रोगनुकारणं नाम पञ्चमो समुद्देशः समाप्तः ।

Post-colopohnic लिपिकृता ब्र. रामसुख तिवाडी अजमेरमध्ये स्वपठनार्थम् ।

### 1740/28480 गोलरेखाध्याय

Opening

।। श्रीगणेशाय नमः ।। श्री गुरुचरणाभ्यां नमः ।

अथ उक्ताराख्यो ग्रन्थो सावजूसयूसकृतो लिख्यते । तत्रास्य त्रयोऽध्याया एकोनषष्टितुल्यानि क्षेत्राणि सन्ति : परं च क्वचित्-पुस्तकेष्टपञ्चाश ५८ न्मितान्येव क्षेत्राणि सन्ति तत्र प्रयोजनद्वयस्यैक-क्षेत्रमेवं कृतम् ।

Closing :

अधिकं भविष्यति पुनर्मतचापंहभ्भचापस्य सजातीयमस्ति तस्मात्कृत चापंहभ्भचापसजातीयास्य वृत्तस्य चापादधिकं भविष्यति इदमेवेष्टम् ।

Colophon & Post-colophon :

इति पुकरसावजूसयूससंज्ञस्य समाप्तम् । अस्मिन् अध्यायम-यमेकोनषष्टि ५७ क्षेत्राणि सन्तीति । सं १७५२ पोष कृष्ण ६

### 1746/28626 भागवत ज्योतिषयोर्भू गोलविरोधपरिहार

Opening :

।। श्रीगणेशाय नमः ।।

अथ श्रीभागवत ज्योतिषयोर्भू गोलपरिमाणे विरोधपरिहारः क्रियते । तत्र श्री भागवते जम्बूद्वीपभूर्लक्षयोजनविस्तृतास्ति । ज्योतिषे तु पञ्चसहस्रयोजनात्मिकैव सर्वा पृथिव्यस्ति । तयोरविरोधप्रकारः । श्रीभागवते महाजम्बूद्वीपस्याष्टौ द्वीपाः संप्रतिगाद्यन्ते इति । तेष्वष्टसुमध्ये महाभारतानुरोधात् जम्बूद्वीपापरनामक एको द्वीपोऽस्ति ।

Closing :

अत्रं सर्वेषु कल्पेषु पृथिव्याः रूपत्रयमस्ति । परन्तु व्यावहारिकाणां मनुष्याणां प्रागद्याभिप्रावेण वा वाराहकल्पे धारणा च मां तु तत्तद् धारणा त्रयाकाररूपैव भाति । अतो वराहकल्पे गोलाकारैव गोलरूपा पृथगेवाङ्गीकृता सूर्यपरिभ्रमणं घटिका यद्वदित्यादिना निबन्ध उक्तम् ।

### 1754/28623 रेखागणित

Opening :

।। श्रीगणेशाय नमः ।।

श्रीकृष्णो जयति । श्रीगुरुचरणकमला जयन्ति । अथोक्तेद-माख्यं रेखागणितं लिख्यते । तत्रास्मिन् ग्रंथे पंचदशाध्यायाः । अष्ट-

सप्तत्युत्तरचतुःशतं क्षेत्राणि सन्ति । तत्र प्रथमाध्यायेऽष्टचत्वारिंश-
क्षेत्राणि प्रदर्श्यन्ते । तत्रादौ परिभाषा ।

Closing : पञ्चसमभुजक्षेत्रस्यसमात्रयोकोणाः । इष्टक्षेत्रस्य कोणाः स्युस्त-
स्माद् इष्टक्षेत्रस्य कोणा अपि समाना भविष्यन्ति। इदमेवास्मक-
मिष्टम् ।

शिल्पशास्त्रमिदं प्रोक्तं ब्रह्मणा विश्वकर्मणे ।।
पारं पर्यवशादेतदागतं धरणीतले ।।१।।

तदुच्छिन्नं महाराजजयसिंहाज्ञया पुनः ।।
प्रकाशितं मया सम्यक् गणकानन्द हेतवे ।।२।।

Colophon : श्रीमद्राजाधिराजप्रभुवरजयसिंहस्य तुष्ट्यै द्विजेन्द्रः श्रीमत्सम्राट्
जगन्नाथ इति समभिधारूढितेन प्रणीते ग्रन्थेऽस्मिन्नाम्नि रेखागणित
इति सुकोणबोधप्रदातर्य्यध्यायोऽध्येतृ मोहापह इह विरत्तिचस्त्रसंख्यो-
गतोऽभूत् ।।१५।। समाप्तोऽयं रेखागणितग्रंथः ।

Post-Colophon संवत् १८०० श्रावणमासे शुक्लपक्षे द्वितीयायां भौमवासरे
लिखतम् । इन्द्रप्रस्थमध्ये । मिश्र विखारीदास पठनार्थम् । मुन्दरजी ।

## 1757/28617 भास्करीयसिद्धान्तशिरोमणि-व्याख्यान

Opening : ।। श्रीगणेशाय नमः ।।

यः पद्मोद्भवदेवदानवपितृक्षोणीतलस्थ क्षपा-
हः संध्यादिवि भागवोधितजगत्प्राग्भारमध्यात्तकृत् ।।
गाढध्वान्ततिरोहिताखिलपदार्थानात्मभाभेर्जनो-
द्वेगोत्थव्यथयेव भासयति तं वन्दे ग्रहाणां पतिम् ।।१।।

श्रुतिस्मृतिविचारणाचरणचारुचित्तः शुचि-
विवेकविनयास्पदं सदुपमन्यगोत्रकृती ।।
मुकुन्दचरणार्चनाविचरणाप्रपञ्चः सुधी-
र्बभूवविभवार्चितार्थिजनसंचयः केशवः ।।२।।

समुद्धृतवसुन्धराविबुधमोहविध्वंसिनोऽ-
स उद्धरण उद्धर प्रथितवादिविद्रावणः ।।
बभूव हुतभुक्क्रियप्रगुणहोमधूमोधृत-
प्रधानकलिकल्मषः प्रियमखः द्रवोधोन्मुखः ।।

अस्मादासीदसीमप्रवरगुणगरिष्टस्तत्वादे पटिष्टः
प्रेमोल्लासिप्रमेय ग्रथितरि विधवन् वीततंद्रः कवीन्द्रः ।

ख्यातो वाचस्पतिः स्वप्रचुररुचिरकोक्त्याकार्तिकेन्द्वद्दढांशो-
कांत्याशुभ्रांशुज्ञोशनोर्बाणगुरुरविजकक्षायोवलक्षाश्चकार ॥४॥

तस्माद्दानविवेकतोषितजगन्माधुर्यधुर्यात्तथा-
साध्वीनां धुरि सद्यशो भुवि वसावन्यां जनिं प्राप्तवान् ।
लक्ष्मीदास इति द्विजन्मचरणद्वन्द्वारविन्दोद्गत
स्वामोदाकुलालिविलसल्लालित्यलीलालयः ॥५॥

Closing : अथोपसंहारः दर्शयेद्द्विविचरं दिवि केवानेहसिं द्युचरदर्शनयोग्ये पूर्वमेव विचरय्य (विरचय्य ?) यथोक्तं रञ्जनायसुजनस्य नृपस्याद्युचरदर्शनयोग्येऽनेहसि काले दर्शयेत् ।

सिद्धान्तोक्तप्रगुणगणितज्ञानगोष्ठ्यामतिश्चेद् –
गोलेच्छेदेप्यमलविपुलोल्लासमृद्धासनायाम् ॥
तेषां चित्ते विनार्तमियाद्युक्तियुक्ता ममैषा
व्याख्या विद्या विरतिनिरतस्याच्युतान्वायरस्य ॥१॥

Colophon : इति श्रीमिश्रवाचस्पतिसूनुलक्ष्मीदासविरचिते भास्करीयसिद्धान्तशिरोमणि व्याख्याने गणिततत्वचिन्तामणौ त्रिप्रश्नाधिकारस्तृतीयः ॥

## 1762/28616 सूर्यपक्षशरणकरणसटीक

Opening : ॥ श्रीहरये नमः ॥

सुरद्रुमं भक्तमनोरथाप्त्यै
गीर्वाणगीर्वाणसंपन्नवेद्यम् ।
अज्ञानविघ्नौघहरंगतास्यं
वन्दे लसद्बालमृगाङ्कभालम् ॥१॥

नत्वा नृसिंहगुरुपादयुगारविन्दम्
दैवज्ञविष्णुकृतखेचरसाधनस्य ॥
श्रीभास्करोदितसम [स्त] करोमि सम्यक्
टीकां स्फुटां बहुविचारविशेषरम्याम् ॥२॥

Closing : अथाधिकारान्तेऽलङ्कारतया वसन्ततिलकामहेकामाह ।
श्रीसूर्यपक्षशरणे शरणेऽतिसुज्ञ
दैवज्ञचित्तहरणेऽभिनवप्रकारे ।
दैवज्ञविष्णुरचिते खचरागमेऽस्मिन्
पातस्फुटप्रकरणं परिपूर्णमासीत् ॥१॥

इति श्री सकलगणकचक्रचूडामणि श्रीकृष्णदैवज्ञात्मजशिवदैवज्ञ-विरचितायां श्रीविष्णुदैवज्ञकृत सूर्यपक्षशरणकरणस्य टीकायां सवासनायां पाताधिकारस्त्रयोदशस्समाप्तः ।। अथ ग्रंथादिजशककालाकेपकशकशककाले ग्रहादिसाधनोपयोगसाधनभूताहर्गणसाधनमिदवज्जा वसन्ततिलकोपजाति कादयरु (?) के कर्तव्ये सति योगान्तरं विपरीतं कार्यम् सैकेकर्तव्ये घटीद्वयमहर्गणे न्यूनं निरेके वारे कर्तव्ये घटीद्वय स्याहर्गणे युक्तं कार्यमित्यर्थः। अहर्गणोत्पन्नग्रहाः क्षेपेषु शोध्याः ग्रहा भवन्ति। अन्यदखिलं ग्रहजातं पूर्ववदेव कार्यम कस्मिन् सति रामतिथ्यल्पकशाककाले सति वासवापूर्व वैपरीत्येनेति संक्षेपः ।

गोदावरी सौम्यतटस्थगोल-<br>
प्रामेभरद्वाजकुलावतंसः ।<br>
दिवाकरः कोंकणवासिसुज्ञः<br>
गणेश संप्राप्तनतिर्बभूव ।।१।।

पञ्चास्य पुत्राः सुतरां पवित्रा<br>
बभूवरेतत्प्रथमस्तु कृष्णः ।<br>
विद्यासदाचारयशोवरिष्ठो<br>
गिरीशनिष्ठो गुणिनां गरिष्ठ ।२।।

नवीनतीर्थग्रथनानुसक्तो<br>
गणेशभक्तो गणितज्ञवर्यः ।<br>
श्रीविधुसंज्ञस्तनयो द्वितीयो-<br>
जगद्गुरुः सज्जनवृन्दवंद्यः ।।३।।

त्रिस्कन्धविद्याकुशलैक मल्लो<br>
मल्लारिनामा नृपपूजितोऽन्यः ।<br>
यं पूजयन्ति स्म सुवासरज्ञाः<br>
श्रीभास्कराचार्यसमं विधिज्ञाः ।।४।।

श्रीकेशवाख्यस्तनयश्चतुर्थो<br>
ज्योतिर्विदाचार्यपरं प्रयातः ।<br>
श्रीविश्वनाथस्तनुजस्तथान्यः<br>
ख्यातो गुणैर्गणितिको वदान्यः ।।५।।

श्रीमत्कृष्णसुतः शिवाख्यगणकः सर्वागमानां परि-<br>
ज्ञातुर्भ्रातुरधीत्य शास्त्रमखिलं श्रीमन्नृसिंहाह्वयात् ।<br>
दैवज्ञार्य्यपितृव्यविष्णुरचितस्योर्व्वामुपक्षाश्रित-<br>
स्याकार्षीत्करणस्य सुज्ञसुखदां टीकां ससद्वासनाम् ।।६।।

वासनारचनामत्र वीक्ष्य तुष्यन्तु तांत्रिकाः ।।
व्याख्यामेवेतरे दुष्टास्तदवोधेन तुष्यतु ।।७।।

इंदुसिन्धु विषये पुंसमिते १५४१ शालिवाहनशके शिवाभिधः ।।
सूर्यपक्षशरणस्य निर्ममे वासनां गणकतोषहेतवे ।।८।।

इति श्रीसकलगणकचक्रचूडामणिकृष्णदैवज्ञसुत श्रीमन्नृसिंह-गणकानुजशिवगणकविरचिता सूर्यपक्षशरणकरणा टीका समाप्ता।

Post-Colophon अत्र संख्या द्वात्रिंशच्छतानि ३२००।। सं० १७३५ चैत्र शुक्ल-पक्षे १३ भौमवासरे दैवज्ञनीलकण्ठढुण्डिराज बालकृष्णैलिखितमिदं पुस्तकम् स्वार्थे परार्थे चेति। श्रीमोरेश्वरार्ज्जुनानंत सांबसदाशिवार्पणमस्तु।

## 1764/29498 सूर्यसिद्धान्त-व्याख्या

Opening : आनंदवल्लिकंदं कंदद्युति वृंद मंदिर मुदारम्।
रघुनंदनमंतस्थं वन्दे वंदारुमंदारम् ।।१।।
श्रीमद्भिस्संम्राड्भिर्जयसिंहनृपाग्रणीभिरतिगूढम्।
स्पष्टाधिकृतौस्पष्टं विवेच्यते गोलाविज्ञजन-तुष्टयै ।।२।।

अथ स्पष्टाधिकारे त्रि प्रश्नादौ च सूर्यसिद्धांते किंचिद्यथामति विचार्यते। तथास्ति।

Closing & Post colophonic प्रकृतश्लोके च चक्रकलिकाभिर्भागहारउक्तस्तत्र भाजके रवि-मध्यगति कलान्यूनाहृति फलमधिकमेव भवेदिति भुजफलानयनं कथं चक्र कलिकाभिरानेयमितिशंका समुदयादिति चेत् सत्यम्। ग्रह भुक्ति युक्ताः कार्याः। ... ... सूक्ष्मांशोनायत इति दिक्।।

## 1787/30147 जातकालंकार शुकचंद्रिकाटीकोपेत

Opening : ।। श्रीगणेशाय नमः ।।

सानन्दं प्रणिपत्य सिद्धिसदनं लंबोदरं भारतीम्
सूर्यादिग्रहमण्डलं निजगुरुं भक्त्या हृदब्जे स्थितम्।
येषामङ्घ्रिसरोरुहस्मरणतो नानाविधाः सिद्धयः
सिद्धिं यान्ति लघु प्रयान्ति विलयं प्रत्यूहशैलव्रजाः ।।१।।

श्रीगणेशाय नमः। अथ शुकचन्द्रिका लिख्यते।
स सिन्धुरास्यो जयति यत्पदाम्भोजसंस्मृतिः ।।
महर्द्धिरूपिणी नृणां विघ्नक्षयहुताशनी ।।१।।

शुकास्य कमलोद्भूतं जातकं कठिनाशयम् ।।
विलोक्य विशदं चक्रे गणेशो विदुषां मुदे ।।१।।
तथापि तत्र मन्दानां सम्यग्बोधो न जायते
अतस्तेषां हितार्थाय क्रियते शुकचन्द्रिका ।।२।। ।

Closing & Colophonic

पुष्करालयवशोगुणसारा, जातकोक्तिरमलेव मराला
संस्कृतविहरतां भवतां मे मानसेति सरसे सुकवीनां ।।८।।

हृद्यैः पद्यैः भावाध्यायः संप्रणीतः ।
सुवृत्तैर्युक्तोष्टाभिः श्रीगणेशेन षष्ठः ।।६।।

इति श्री जातकालंकारे व्यत्यय भावाध्यायः षष्ठः (६)
अभूदवनिमण्डले गणकमण्डलाखण्डलः ।
श्रुतिस्मृतिविहारवान् त्रिबुधमण्डलीमण्डनः ।।
प्रचण्डगुणगुर्ज्जराधिपसभाप्रभातप्रभा-
करीन्द्रकुलभूषणं जगति काव्यवित् दैववित् ।।१।।

भारद्वाजकुले बभूव परमं तस्यात्मजानां त्रयम् ।
योऽयं तत्रभवद्ग्रहज्ञतिलकः श्रीसूर्यसूरिः सुधीः ।।
श्रीमान्सर्वकलानिधिस्तदनुजो गोपालनामाऽभवत् ।
श्रीमद्दैवविदांवरस्तदनुजः श्रीरामकृष्णोऽभवत् ।।२।।

शाके मार्गणरामसायकधरा १५३५ तुल्ये नबस्ये तथा।
मासे वृध्नपुरे सुजातकमिदं चक्रे: गणेशः सुधीः।
छन्दोऽलङ्कृतिकाव्यनाटककलाभिज्ञः शिवाध्यापकः
तन्त्रं श्रीशिवविन्मुदे गणितभूगोपालसूनुः स्वयम् ।।३।।

ये पठिष्यन्ति दैवज्ञास्तेषामायुः सुखं शिवम् ।।
भूयात् कैरवकुन्दाभा सुकीर्तिः सर्वतोदिशम् ।।४।।

हृद्यैः पद्यैर्गुम्फिते सूरितोषेऽलङ्काराख्ये जातकेमञ्जुलेऽस्मिन् ।।
वंशाध्यायः श्रीगणेशेन वर्यैर्वृत्तैयुक्तो वेदसंख्यैः प्रणीतः ।।५।।

इति श्रीजातकालंकारे षष्ठाध्यायः ।।

टीका—

सेयं कृतातपः शुक्ले वारेऽर्कस्यदिने तिथौ
रामारंगे भवंद्रपाध्या (?) घर्णशर्मणा ।।
भृगुणा संयुतोगेशस्त्रिकः स्थाने न चेत् स्थितः ।।
योगेऽस्मिन् मानवो जातो राजपूज्यः सुनिश्चितः ।।१७।।

मद्बुद्ध्याखयानुसारेण कृतेयं शुकचन्द्रिका ।
तत्रापि भ्रान्तितः किञ्चिद्द्विरुक्तं क्षम्यतां बुधैः ।।१८।।

वन्देऽश्वधिपते भूपते भूपते विक्रमाख्ये-
केनिदेसेन्दू(?) प्रभावेयमनिशन्तूद्गमे ।।१६।। (?)

इति श्री सेवारामविरचिता शुकचंद्रिका समाप्ता ।।

## 1795/28163 तत्त्वजातक

Opening :

।। श्रीगणेशाय नमः ।।

कस्तूरीकोशभासः कमलदलसुहृत्कौस्तुभाङ्कः कृपालुः ।
कालिन्दीकूलकेलिः कुलिशकरत्रतुः कामिनीकण्ठमालः ।।
कंसारिः कैटभारिः कलिकुलकदनः कौलपानां करालः ।
कल्पस्याणुः कवीनां कलयतु कुशलं केशवः केशिकालः ।।१।।

नत्वा कृष्णाङ्घ्रियुग्मं परमपदप्रदं रम्यराजीवरूपम् ।
विश्वोत्पत्त्येकबीजं भवभयहरणं कामधेनुं कृपालुम् ।।
काशीस्थो गौडविप्रोहरिरसमधुपः सेवकः सज्जनानाम् ।
कुर्वेसिद्धान्तसारं मुनिमनुजमतं हृद्यपद्यैः प्रपूर्णम् ।।२।।

Closing :

जीवो वा भार्गवो वा परमबलयुतो कामभावेषु यासाम् ।
कर्केशो धर्मलाभे तनुसुखतनये कर्मकोशे बलिष्ठः ।।
तासां चन्द्राननानां कमलदलदृशां कामिनीनां सुवर्णा ।
राजन्ते राज्यलक्ष्मीः मणिमयशिविरे दासिभावाः सदैव ।।५०।।

Colophon :

इति श्रीतत्त्वजातकम् ।

## 1813/28169 तिथिचूडामणि

Opening :

।। श्रीगणेशाय नमः ।।

प्रणम्य पुष्पदन्ताख्यौ शारदां गणनायकम् ।।
तिथिसिद्धिकामुदुघां करोम्यहमतिस्फुटाम् ।।१।।

विघ्नेशं च गिरं गुरुं हरिहरब्रह्मार्कमुख्यान्ग्रहान् ।
नत्वा चैव गुरोः पदाब्जयुगलं प्राप्तः प्रसादः सुधीः ॥
श्रीमद्‌भास्करकेशवादिरचिता वीक्ष्यद्विचूडामणिः ।
शिष्यप्रार्थनया करोमि सुगमं तिथ्यादिसिद्ध्यै स्फुटम् ॥२॥

Closing & Colophonic :

न्यस्ताधिकघटीतिह्यामन्तरं तेन युक् स्फुटम् ।
तेनो ता भः भोगस्स्यात्सूक्ष्मथं घटिकादिकम् ॥१७॥

आसादुन्नत दुर्गनाम्निनगरे श्रीवायुनास्तिपितौ ।
ज्योतिश्शास्त्रविचारसारचतुरः श्रीघोषनाख्यो द्विजः
तत्सूनुर्मतिमाँस्तु तेन रचितं श्रीरामचंद्रेण च ।
वीक्ष्य सद्‌गणकैस्सदासमुदितैः तिथ्यादिचूडामणिः ॥१८॥

इति तिथिचूडामणिः संपूर्णं ।

## 1826/28621 पंचांगाधिकार

॥ श्रीमहालक्ष्म्यै नमः ॥

Opening :

यो निर्गुणो गुणमयं वितनोति विश्वम् ।
तापत्रयं हरति यस्तपनोप्यजस्रम् ॥
कालात्मको जगति जीवयते च जन्तून् ।
ब्रह्माण्डसंपुटमणिद्युमणि तमीडे ॥१॥

अथसंवत्सरफलानि

ईतयश्चाग्निकोपश्च व्याधयः प्रचुरा भुवि ।
प्रभवाब्दे मंदवृष्टिस्तथापि सुखिनो जनाः ॥
दण्डनीतिपरा भूपाः बहुसस्यार्घवृष्टयः ।
विभवाब्देऽखिला लोकाः सुखिनः स्यु र्विवैरिणः ॥२॥

Closing :

साधारणो विरोधकृदथपरिधावि प्रमाथिनामानौ ॥
आनन्दराक्षसा—न पिङ्गलकालयुक्ताश्च सिद्धा-
र्थरौद्रदुर्म्मतिदुंदुभयो वत्सराः क्रमादपरो ।
रुधिरोद्गारी रक्ताक्षसंज्ञकः क्रोधनः क्षयकृत् ॥६०॥

Colophon : इति श्री सवाई जयसिंहदेवविरचितेपञ्चाङ्गाधिकारे वर्ष-विधिविचारः समाप्तः ।

Post-colophon : संवत् १८४८ वर्षे मिति वैशाख शुक्ल २ गुरु लिखतं गोविन्दराम स्वपठनार्थम् । सवाई प्रतापसिंहराज्ये लिपिकृत जयनगरे । श्रीरस्तु ।

(Some scattered verse after post colophonic description)

## 1829/28420 प्रबोधसुधाकर

Opening : ।। ॐ श्रीगणेशाय नमः ।।

ॐ । नित्यानन्दैकरूपं सच्चिन्मात्रं स्वयं ज्योतिः ।
पुरुषोत्तममजमीशं वन्दे श्रीयादवाधीशम् ।।१।।

यं वर्णयितुं साक्षाच्छ्रुतिरपि मूकैव मौनमावहति ।
सोऽस्माकं मनुजानां किं वाचां गोचरो भवति ।।२।।

यद्यप्येवं विदितं तथापि परिभाषिणो भवेद्देव ।
अध्यात्मशास्त्रज्ञानं हरिचिन्तनकीर्तनाभ्यासः ।।३।।

Closing & Colophonic : ते मूर्त्ती द्वै विरूपे जगति विचरतः स्वार्थं इत्यालयद्भि-
र्वेदैः श्रीकृष्णरामौ सुकुशलचरितौ वर्णितौ तद्वचांसि ।
श्रुत्वा सम्यग्विदित्वा तदवगमनतस्त्यक्तसंदेहजात ।
सानन्दः कृष्णपादाम्बुजरजसि चिरं चंचरीकोऽहमस्मि ।।२६।।

इन्द्राशापरिपूरके सूरसरिज्ज्येष्ठा य गोदस्तटे
जातस्तेन सुदिष्टवेदिदिनकृन्नाम्ना सुनाम्नायतः ।
भक्तिज्ञानविरागवर्णित परानन्दानुभूतिः कृतः
श्रीमात्बोधसुधाकरः स जगतां निः श्रेयसे कल्पताम् ।।३०।।

परोपकारार्थमुदाहृतेन यद्वाग्विसर्गेण रसोज्ज्वलेन ।
शब्दाभिधं ब्रह्म यतः प्रवृत्तं स प्रीयतां यादवराजसिंहः ।।३१।।

इति दैवज्ञसूर्याभिधकृतः प्रवोधसुधाकरः समाप्तः ।।
श्रीरस्तु । कल्याणमस्तु ।

## 1858/28168 मुहूर्त्तवृत्तशत

Opening : ।। श्रीगणेशाय नमः ।।

ब्राह्मेश चन्द्रेण दिवाकराग्नि वस्वादिरूपाणिसुरस्य यस्य ।
नत्वाऽच्युतं तं व्यवहारसिध्यै महेश्वरोवृत्तशतंकरोति ।।१।।

संवत् सरत्वंयनमास दिनेश पक्षतिथ्यार्क्ष योगकरणादय राशिभानां।
लग्नादिभाव निचयस्य च लोकसिद्धाः संज्ञास्तु वृत्तशतंनाम्नि
सदात्र वेद्याः ।।२।।

Closing & Colophonic : आदौ त्याज्यविधिस्ततोत्रयविधिः प्रोक्तो विधि संस्कृते ।
रुद्वाहोऽपरिग्रहोऽथ निलयारत्नोऽभिषेकोभृतां ।।
यात्रा गोचर शुद्धि संक्रम रवे सस्थापनं स्वर्गिणा ।
ज्ञातव्यं विबुधेनवृत्तशततः प्रोक्तं मयाऽविन्यसंत् ।।१०३।।

इति व्रतशत संपूर्ण ।। इति श्री महेश्वरभट्ट विरचिते मुहूर्त्त व्रतशते सुरस्थापनं प्रकरणं एकादशमं संपूर्णं ।। संवत् १९१९ शाके १७८४ प्रवर्त्तमान्ये मासोजय मासे चैत्रमासे शुध पक्षे तिथौ तृत्ती ३ बुधवासरे चतुर्थ पहरे संपूर्णम् । इलदुर्ग्रदेशे वटुपुर्य्यनिधाने ग्रामे वास्तव्यं द्विजखेटक ब्राह्म ज्ञाति जोशिदला सुखरामं केशवरांमेण इदम् ग्रंथं लीपीकृतं स्वयं पठनार्थं श्रीरस्तु कल्याणमस्तु ।

—